अथ आवर्णि प्रकरणम् ६

आग्नीध्राग्रयणाज्योपावर्ताप्नोत्यायुधश्रुतिः
आशीराहवनीयाग्नेयाग्नामुष्यायणश्रुतिः १
आत्मशब्दो नोरसादिरायुश्शब्दो नघात्परः
अन्तोदात्तो निहतो वाप्यादित्यश्रुतिरिष्यते २
आश्विनारण्यशब्दौ चाप्यन्तोदात्तश्रुतौ श्रुतिः
आहुत्यायतनयोश्च शब्दौ नापूर्वकौ न तु ३
उपाकुर्यादपोपादि चाकरोत्याकृताय च
इष्टिष्वाकाल आकूत्या कुर्वन्नाकूतिराकृतम् ४
आक्रन्दयत आक्रम्या तथाऽऽक्रमणमित्यपि
आकूताय तथाऽऽकृत्या कूतमाखर आगमन्न् ५
आग्निमारुतआगश्चोपागुरागामथेङ्ग्यगम्
उपागह्याগमिष्ठाश्चागच्छेदाघारमप्यथ ६
सोच्चमाघारयेदिङ्ग्य आचितञ्चाजिमप्यथ
आञ्जीताण्डाभ्यामातञ्च्यादातिथ्यं चातपत्यथ ७
आतप्स्यतेप्यातपते प्यातपायाततताविने
आतङ्क्येनाप्यातपतश्चातप्यायात्त आदिति ८
आदायादिष्टमाद्याद्यास्तथादहनमित्यपि
आदानाश्चाधिमाधीतमाधिपत्यन्तथाधयः ९
आधानं चाप्यान्त्यायन आनुजावर इत्यपि

आनृचुश्चानुष्टुभवाक्तथाचापमथाप्स्यथ १०
आप्त्यै आप्त्वा तथाचाप्ताप्यापस्वारान्त एव च
पश्यतापश्चापयितापलायिताय चोत्तरम् ११
यजुषा प्राप्तुमाभ्यश्चाभिराभ्याम् नत्ववग्रहात्
आम्बानामामनं च स्यादाममच्चामयाविनः १२
आमिक्षयामयत्यायुमुपायन्त्यायतीं तथा
आयवस्तघपूर्वो नस्यादुपायंस्तथा भवेत् १३
सिताय सूर्यः पृथिव्या इत्येतेषु न चायते
आयासायायतयायो आर्तीयेतामथार्तवः १४
आरभ्यार्द्रस्यारमार्ध्यन्तार्द्रार्तिम् चार्तवेषु च
आर्ध्नोदारभ्यते चारेप्यात्र्यारमणमार्पयत् १५
आरादालाद्यायालब्धायालब्धं चन नापरम्
आलभेताप्यालभतेप्येतौ सौदात्तकौ तथा १६
आव्रश्चनात्तथावीतन्नाविराविद्धमित्यपि
आवन्नावग्रहादाव्यं पूर्वावल्वगत आवृतः १७
आवापस्य तथावृत्त्या आविब्वेशाप्युदात्तवान्
आववर्ति तथाव्याध आविष्टितमथाशिरम् १८
आश्ञादाश्राव्यमाश्रेषा आशितिम्ने तथाशच
आशानामाशुमाश्यं चाश्रावयेदप्युदात्तवान् १९
तथाचाशुरथाय स्यादासन्नास्तामथास्महे

आसीतास्ते तथासाते त्वासीनश्चासुरस्तथा २०
त्वापरन्नासते थास्यादासिष्यत इति त्रयम्
आसीदासामहै चापि त्वासामास्येन चासुरम् २१
आसादयति चोदात्तवानासन्नाय चाप्यथ
आस्थातास्ताव आहावमाहृत्याहवनस्तथा २२
अल्पेनाद्याहरन्ति स्यादाहनन्याय चाहलम्
ऋतुनास्मोपहत्य प्रपराश्रााव्यानुवाक्यया
आहैतत्पूर्वमाहुश्चेत्येषावर्णी सुनिर्मिता २३
इति आवर्णि प्रकरणम् ६